श्रीश्रीगदाधरगौराङ्गौ जयतः
श्रीश्रीराधागोविन्ददेवौ विजयेताम्

महर्षि श्रीकृष्णद्वैपायनप्रणीतम्

## प्रथमः स्कन्धः

श्रीहरिदास शास्त्री

श्रीश्रीगदाधरगौराङ्गौ जयतः

श्रीश्रीराधागोविन्ददेवौ विजयेताम्

# श्रीमद्भागवतम्

महर्षि श्रीकृष्णद्वैपायनप्रणीतम्

## प्रथमः स्कन्धः

श्रीश्रीधरस्वामि कृत भावार्थदीपिका, श्रीजीवगोस्वामि कृत
क्रमसन्दर्भः; श्रीविश्वनाथ चक्रवर्त्ति कृत सारार्थदर्शिनी
श्रीनाथचक्रवर्त्ति कृत श्रीचैतन्यमतमञ्जूषा
श्रीबलदेवविद्याभूषण कृत वैष्णवानन्दिनी,
श्रीमन्मध्वाचार्य्यकृत भागवततात्पर्य्यनिर्णयः;
श्रीहरिदासशास्त्रि कृत विनोदिनीति
टीकाभिरन्वयानुवादेन
चालङ्कृतम्


श्रीवृन्दावनधामवास्तव्येन न्यायवैशेषिकशास्त्रि, नव्यन्यायाचार्य्य,
काव्यव्याकरणसांख्यमीमांसा वेदान्ततर्कतर्कतर्क
वैष्णवदर्शनतीर्थाद्युपाध्यलङ्कृतेन
श्रीहरिदास शास्त्रिणा


सम्पादितम् ।


सद्ग्रन्थप्रकाशक :
श्रीगदाधर गौरहरि प्रेस * श्रीहरिदास निवास
कालीदह, वृन्दावन, जिला-मथुरा
(उत्तर प्रदेश) पिन-२८११२१

श्रीश्रीगदाधरगौराङ्गौ विजयेताम्

श्रीश्रीराधागोविन्दौ जयतः

# श्रीमद्भागवतम्

## महर्षि श्रीकृष्णद्वैपायनप्रणीतम्

## प्रथमः स्कन्धः

## प्रथमोऽध्यायः

ॐ नमो भगवते वासुदेवाय

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्,
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा,
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥१॥

अन्वयः

यतः अस्य—विश्वस्य, जन्मादि—जन्मस्थितिभङ्गं भवति, यः अभिज्ञः—सृष्टेः पूर्वं प्रकृतीक्षणादि कर्त्ता, यःस्वराट्—स्वतःसिद्धज्ञानवान् । अर्थेषु—घटादिकार्य्येषु सद्रूपेण अन्वयात्, अकार्य्येभ्यः—खपुष्पादिभ्यः इतरतः व्यतिरेकात् । य आदिकवये—ब्रह्मणे, हृदा—मनसैव ब्रह्म तेने प्रकाशितवान्, यत् यत्र—वेदे, सूरयः—देवा अपि मोहं प्राप्नुवन्ति, यथा—यद्वत्, तेजोवारिमृदां विनिमयः, व्यत्ययः, अन्यस्मिन्—अन्यावभासः इति यावत्, स यथा अधिष्ठानसत्तया सत्यवत् प्रतीयते, तथा, यत्र त्रिसर्गः—त्रयाणां मायागुणानां सर्गः, अमृषा—सत्यवत् प्रतीयते, स्वेनैव धाम्ना—महसा, सदा निरस्तं कुहकं कपटं मायालक्षणं यस्मिन् तम्, सत्यं—सत्यस्वरूपं, परं—परमेश्वरं, वयं धीमहि ध्यायेमः, (ध्यायतेर्लिङि छान्दसम्) ॥१॥

जिनसे परिदृश्यमान विश्व के सृष्टि-स्थिति लयरूप कार्य्य होते रहते हैं, घटपटादि कार्य्य में एवं आकाशकुसुमादि अकार्य में सत् एवं असत् रूप में जिनकी उपलब्धि होती है, जो सर्वज्ञ एवं सर्वशक्तिमान् हैं, जिन्होंने देववृन्द का अति दुर्बोध्य वेद का सञ्चार आदि कवि ब्रह्मा के हृदय में अन्तर्य्यामि

**रूप से किया है, मरीचिका प्रभृति में वारि बुद्धि के समान जिनमें अधिष्ठित मायिक सृष्टि भी सत्य रूप में प्रतिभात होती है, उन स्वीय प्रभासे मायालक्षणकपटनिरसनकारी सत्यस्वरूप परमेश्वर का ध्यान हम सब करते हैं ॥१॥**

## भावार्थदीपिका

**ॐ नमो भगवते परमहंसास्वादित-चरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीकृष्णाय ।**

वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि । यस्यास्ते हृदये सम्वित्तं नृसिंहमहं भजे ॥१
विश्व-सर्गविसर्गादि-नवलक्षणलक्षितम् । श्रीकृष्णाख्यं परं धाम जगद्धाम नमामि तत् ॥२
माधवोमाधवावीशौ सर्वसिद्धिविधायिनौ । वन्दे परस्परात्मानौ परस्परनतिप्रियौ ॥३
सम्प्रदायानुरोधेन पौर्वापर्य्यानुसारतः । **श्रीभागवत-भावार्थ-दीपिकेयं** प्रतन्यते ॥४
क्वाहं मन्दमतिः क्वेदं मथनं क्षीरवारिधेः ? किं तत्र परमाणुर्वै यत्र मज्जति मन्दरः ?५
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् । यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥६
श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ।
द्वात्रिंशत्त्रिशतञ्च यस्य विलसच्छाखाः सहस्राण्यलं पर्णान्यष्टदशेष्टदोऽतिसुलभो वर्वर्त्ति सर्वोपरि ॥७

अथ नाना-पुराणशास्त्र-प्रबन्धैश्चित्त-प्रसत्तिमलभमानस्तत्र तत्रापरितुष्यन्नारदोपदेशतः श्रीमद्भगवद्-गुणवर्णनप्रधानं श्रीमद्भागवतशास्त्रं प्रारिप्सुः श्रीवेदव्यासस्तत्प्रत्यूहनिवृत्त्यादिसिद्धये तत्प्रतिपाद्य-परदेवतानुस्मरणलक्षणं मङ्गलमाचरति—जन्माद्यस्येति । परं परमेश्वरम्; धीमहीति—ध्यायतेर्लिङि छान्दसं, ध्यायेम इत्यर्थः, बहुवचनं शिष्याभिप्रायकम् । तमेव स्वरूप-तटस्थ-लक्षणाभ्यामुपलक्षयति । तत्र स्वरूपलक्षणम्—सत्यमिति; सत्यत्वे हेतुः—यत्र यस्मिन् ब्रह्मणि त्रयाणां मायागुणानां तमोरजः-सत्त्वानां सर्गो भूतेन्द्रियदेवतारूपोऽमृषा सत्यः । यत्सत्यतया मिथ्यासर्गोऽपि सत्यवत् प्रतीयते, तं परं सत्यमित्यर्थः; तत्र दृष्टान्तः—तेजोवारिमृदां यथा विनिमय इति; विनिमयो व्यत्ययोऽन्यस्मिन्नन्यावभासः; स यथाधिष्ठानसत्तया सत्यवत् प्रतीयते, तद्वदित्यर्थः; तत्र तेजसि वारिबुद्धिर्मरीचिकायां प्रसिद्धा, मृदि च काचादौ वारिबुद्धिर्वारिणि च काचादि-बुद्धिरित्यादि यथायथमूह्यम् । यद्वा, तस्यैव परमार्थसत्यत्वप्रतिपादनाय तदितरस्य मिथ्यात्वमुक्तम्; यत्र मृषैवायं त्रिसर्गो, न वस्तुतः सन्निति । यत्रेत्यनेन प्रतीतमुपाधिसम्बन्धं वारयति । स्वेनैव धाम्ना महसा निरस्तं कुहकं कपटं मायालक्षणं यस्मिन् तम् । तटस्थलक्षणमाह—जन्मादीति । अस्य विश्वस्य जन्म-स्थिति-भङ्गं यतो भवति, तं धीमहि । तत्र हेतुः—अन्वयादितरतश्च, अर्थेष्वाकाशादि-कार्य्येषु परमेश्वरस्य सद्रूपेणान्वयात्, अकार्य्येभ्यः खपुष्पादिभ्यस्तद्व्यतिरेकाच्च । यद्वा, अन्वय शब्देनानुवृत्तिः, इतरशब्देन व्यावृत्तिः;—अनुवृत्तत्वात् सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत्, इतरतो व्यावृत्तत्वाद् विश्वं कार्य्यं घटकुण्डलादिवदित्यर्थः । यद्वा, सावयवत्वादन्वय-व्यतिरेकाभ्यां यदस्य जन्मादि, तद्यतो भवतीति सम्बन्धः । तथा च श्रुतिः—'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, 'यत् प्रयन्त्यभिसंविशन्ति' इत्याद्या; स्मृतिश्च—'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥' इत्याद्या । तर्हि किं प्रधानं जगत्कारणत्वाद्ध्येयमित्यभिप्रेतम्? नेत्याह—अभिज्ञो यस्तं (धीमहि)—'स ऐक्षत लोकान्नुसृजा' इति, 'स इमान् लोकानसृजत' इत्यादि श्रुतेः, ईक्षतेर्नाशब्दम्' इति न्यायाच्च । तर्हि किं जीवो ध्येयः स्यात्? नेत्याह—स्वराट् स्वेनैव राजते यस्तं, स्वतःसिद्ध-ज्ञानमित्यर्थः । तर्हि किं ब्रह्मा ध्येयः?—'हिरण्यगर्भः समवर्त्तताग्रे, भूतस्य जातः पतिरेक आसीत्' इति श्रुतेः? नेत्याह—तेने इति; आदिकवये ब्रह्मणेऽपि ब्रह्म वेदं यस्तेने प्रकाशितवान्;—'यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं, मुमुक्षुर्वै शरणमहं प्रपद्ये ॥' इति श्रुतेः । ननु ब्रह्मणोऽन्यतो वेदाध्ययनमप्रसिद्धम्? सत्यम्, तत्तु हृदा मनसैव तेने

विस्तृतवान्। अनेन बुद्धिवृत्तिप्रवर्त्तकत्वेन गायत्र्यर्थोऽपि दर्शितः; वक्ष्यति हि—'प्रचोदिता येन पुरा सरस्वती, वितन्वताजस्य सतीं स्मृतिं हृदि। सलक्षणा प्रादुरभूत् किलास्यतः, स मे ऋषीणामृषभः प्रसीदताम्॥' इति। ननु ब्रह्मा स्वयमेव सुप्तप्रतिबुद्ध-न्यायेन वेदमुपलभताम्? नेत्याह—यद्यस्मिन् ब्रह्मणि सूरयोऽपि मुह्यन्तीति। तस्माद्‌ब्रह्मणोऽपि पराधीनज्ञानत्वात् स्वतःसिद्धज्ञानः परमेश्वर एव जगत्-कारणत्वेन ध्येयः, अतएव सत्यः, असतः सत्ताप्रदत्वाच्च। परमार्थसत्यत्वेन सर्वज्ञत्वेन च सदा निरस्त-कुहकस्तं धीमहीति गायत्र्या प्रारम्भेण गायत्र्याख्य-ब्रह्मविद्यास्वरूपमेतत् पुराणमिति दर्शितम; यथोक्तं मत्स्यपुराणे पुराणदानप्रस्तावे—'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः। वृत्रासुरवधोपेतं तद्भागवतमिष्यते॥ लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम्। प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम्। अष्टादशसहस्राणि पुराणं तत् प्रकीर्त्तितम्॥'; पुराणान्तरे च—'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः। हयग्रीवब्रह्मविद्या यत्र वृत्र-बधस्तथा। गायत्र्या च समारम्भस्तद्वै भागवतं विदुः॥' इति; पद्मपुराणे च अम्बरीषं प्रति श्रीगौतमवचनम्—'अम्बरीष! शुकप्रोक्तं नित्यं भागवतं शृणु। पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम्॥' इति। अतएव भागवतं नामान्यदित्यपि नाशङ्कनीयम्॥१॥

### विनोदिनी

विनोदिनीति विख्याता सज्जनसुखदायिनी।
क्रियते विमलाटीका हरिदासेन शास्त्रिणा॥

प्राणीमात्र का एकमात्र कल्याणकर उपाय, समस्त शास्त्र का एकमात्र निर्णय, एवं मनः प्रसन्नता का एकमात्र कारण निर्वचन के निमित्त प्रेरित होकर महर्षि श्रीकृष्णद्वैपायन, स्वयमुपलब्धि कर जिस वास्तव तत्त्व को लिपिबद्ध किए हैं, वह ही श्रीमद्भागवत ग्रन्थ है। इसमें श्रीकृष्ण का ही स्वयं भगवत्त्व प्रतिपादित है। समग्र ऐश्वर्य्य, समग्र वीर्य्य, समग्र यशः, समग्र श्री, समग्र ज्ञान एवं समग्र वैराग्य श्रीकृष्ण में ही विद्यमान हैं। सर्वाधिक गुणशाली, भयापहारक, परमाश्रय एवं असमोर्द्ध्व कारुण्यादि गुण मण्डित होने के कारण श्रीकृष्ण ही एकमात्र उपास्य हैं। सर्वलोकमङ्गलकारित्व श्रीकृष्णचरित्र में ही है। सुस्वभाव, मृदुता एवं परमोदारता में श्रीकृष्ण ही असमोर्द्ध्व हैं, सर्वशास्त्र का सार श्रीकृष्ण नाम ही उसका परिचायक है, सर्वाकर्षक— सर्वाधार सर्वानन्दद श्रीकृष्ण ही हैं। श्रीकृष्ण ही स्वयं भगवान् हैं, एवं तदीय प्रतिपादक शास्त्र होने के कारण ही प्रस्तुत ग्रन्थ का नाम भी श्रीमद् भागवत है। भक्तियोग के द्वारा ही मन प्रसन्न होता है। तज्जन्य श्रीकृष्ण नाम-गुण वर्णन प्रधान शास्त्र का प्रणयन श्रीमहर्षि ने किया है।

इसमें वास्तव वस्तु का वर्णन है। वस्तु का अंश जीव, वस्तु की शक्ति माया, वस्तु का कार्य्य जगत्—इस प्रकार समस्त वस्तु ही है, वह वस्तु अद्वय ज्ञानतत्त्वस्वरूप है। उसका त्रिविध प्रकाश ब्रह्म, परमात्मा, भगवान् रूप में हैं। वस्तु एक सशक्तिक होने पर भी उपासक की योग्यता के अनुसार निर्विशेष दृष्टिसम्पन्न के समीप में ब्रह्म रूप में, किञ्चिदनुसन्धानरत योगिगण के समीप में परमात्मा रूप में, भक्तगण के निकट भगवान् रूप में एवं व्रजीय भक्तगण के निकट श्रीकृष्ण रूप में दृष्ट होते हैं।

इसमें कपटवर्जित परम धर्म का वर्णन है। उक्त परमधर्म का वर्णन अन्यत्र नहीं है। परमधर्म में भुक्तिमुक्तिरूप कपटता वर्जित है, प्राणीमात्र का शुभाकाङ्क्षी एवं भूत दया समन्वित सज्जनगण ही श्रीमद्भागवत शास्त्रानुशीलन का अधिकारी है। श्रीमद्भागवत श्रवण के समकाल में ही श्रीहरि, श्रवणकारी के हृदय में सद्यः अवरुद्ध होते हैं। यह ग्रन्थ साक्षात् श्रीकृष्णस्वरूप हैं, अर्थात् श्रीकृष्ण में जो सब जनहितकर गुणावली हैं, उन सबका वर्णन भक्त-भगवान् के चरित्र रूप में मनोरम रूप में इसमें वर्णित है। जिसका श्रवणमात्र से ही परमपुरुष श्रीकृष्ण में विमलाभक्ति होती है, एवं तज्जन्य वह शोक-मोह से निर्मुक्त होकर परहितव्रती होता है।

सुप्राचीन टीकाकारों के मध्य में श्रीधरस्वामिपादकृत टीका एवं तदनुगत श्रीजीवगोस्वामि प्रभृति श्रीचैतन्यदेव के मतानुग महोदयगण की टीका ही श्रीमद्भागवतार्थ आस्वादन के निमित्त परमोपाय है। अतः उन सबके टीकाग्रन्थ के द्वारा ही प्रस्तुत ग्रन्थ का आस्वादन यथायथ रूप से होगा। श्रीचैतन्यमतानुग महानुभाववृन्द श्रीधरस्वामिपाद की टीका अवलम्बन से ही श्रीमद्भागवतार्थ का आस्वादन करते हैं। अतएव तदीय टीका क्रम से ही श्रीमद्भागवतार्थ का प्रकाश होगा। मङ्गलाचरण समन्वित श्रीधरस्वामिपाद की टीका यह है—

जिनके वदन में श्रीसरस्वती विराजित हैं, लक्ष्मी जिनके वक्षः विलासिनी हैं, जिनके हृदय में संवित् है, उन श्रीनृसिंहदेव का मैं भजन करता हूँ।

विश्व सर्ग-विसर्गादि नवलक्षणलक्षित जगद्धामस्वरूप श्रीकृष्णाख्य पदमतत्त्व को मैं प्रणाम करता हूँ।

माधव उमाधव ईशद्वय सर्वसिद्धिप्रदायक हैं, परस्पर अभिन्नहृदय होकर भी पारस्परिक नतिप्रिय हैं।

सम्प्रदाय के अनुरोध से पौर्वापर्य्य अनुसन्धानपूर्वक श्रीमद्भागवत भावार्थदीपिका का प्रणयन कर रहा हूँ।

कहाँ मैं अतिशय मन्दमति हूँ, और क्षीरवारिधि का मन्थनरूप कार्य्य कितना दुरूह है, जहाँ मन्दर पर्वत ही निमज्जित हो जाता है, वहाँ परमाणु निमज्जित होगा उसमें कहना ही क्या है?

जिनकी कृपा से मूक व्यक्ति भी वाचाल होता है, पङ्गु गिरि लङ्घन करने में सक्षम होता है, उन परमानन्दस्वरूप माधव की मैं वन्दना करता हूँ।

श्रीमद्भागवत नामक एक कल्पतरु है, इसका उद्भवस्थल मूल वीज—प्रणव ॐ-कार है, अर्थात् ॐ-कार का ही अर्थ श्रीमद्भागवत है। इसमें द्वादश स्कन्ध हैं, एवं भक्ति आलवाल, वृक्षमूल में जल प्रदानार्थ जलाधार भक्ति है। अर्थात् भक्ति के द्वारा सिञ्चित होकर श्रीमद्भागवतार्थ कल्पतरु जीवित रहता है। ३३५ शाखा, अध्याय हैं, श्लोकावलि अष्टादशसहस्र हैं। यह ग्रन्थ अभीष्टप्रदाता है, एवं कल्पतरु की अपेक्षा यह मर्त्यलोक में अति सहजप्राप्य है। महत्त्व में यह ग्रन्थ असमोर्द्ध्व है।

जनशिक्षाव्रती परमेश्वर, द्वापरयुग में मनुष्यों की विद्याग्रहणासामर्थ्य को देखकर विद्याग्रहणोपयोगि प्रक्रिया उद्भावन हेतु श्रीवेदव्यास रूप में आविर्भूत हुए थे। उन्होंने यथारीति नाना पुराणशास्त्रों का प्रणयनपूर्वक निज शिष्य के द्वारा विद्या का प्रसार किया था, किन्तु उससे उनके चित्त में शान्ति नहीं आई। गुरुवर्य्य श्रीनारद महाशय के निकट स्वीय चित्ताप्रसन्नता का कारण अवगत होने के निमित्त आपने निवेदन भी किया, उत्तर में श्रीदेवर्षि ने कहा—स्वयं अनुभव न कर उपदेश प्रदान से ही ऐसी अवस्था चित्त की हुई है, अतः जनकल्याणकर परतत्त्व को अवगत होकर उसका वर्णन करो। देवर्षि के आदेश से भक्तियोग के द्वारा अन्तःकरण निर्मल कर सर्वशास्त्र सार एवं एकमात्र जनहितकर पदार्थ को देखा, तत्पश्चात् स्वानुभूत पदार्थ रूप श्रीमद्भगवत् श्रीकृष्णगुण वर्णनप्रधान श्रीमद्भागवताभिधेय शास्त्र का प्रणयन किया। प्रणयन में प्रवृत्त होकर प्रत्यूह निवृत्ति हेतु श्रीमद्भागवत का एकमात्र प्रतिपाद्य देवतास्वरूप श्रीकृष्ण का अनुस्मरणरूप मङ्गलाचरण करते हैं—'जन्माद्यस्य' श्लोक के द्वारा। श्लोकस्थ 'परं' पद का अर्थ—परमेश्वर हैं, धीमहि—क्रियापद है, 'ध्यायतेर्लिङि छान्दसं' छान्दस प्रयोग से निष्पन्न क्रियापद है, अर्थ है—ध्यायेमः, वयं—कर्त्ता हैं। हम सब ध्यान करते हैं। निजाचरण के द्वारा शिष्यसमूह को संग्रह करने के निमित्त बहुवचन का प्रयोग आपने किया है। उन परमेश्वर का वर्णन स्वरूपलक्षण एवं तटस्थलक्षण से होता है। जो धर्म स्वरूपमें सर्वदा स्थित होकर परिचायक होता है, वह स्वरूपलक्षण है। व्यावृत्ति करना, व्यवहारोपयोगि करना ही लक्षण का प्रयोजन है। कार्य्य के द्वारा जिनका परिज्ञान होता है, वह तटस्थ लक्षण है। वह स्वरूप के बाहर अवस्थित होकर वस्तु का परिचायक होता है। उसमें से स्वरूपलक्षण को दर्शाते हैं, 'सत्यं' पद के द्वारा। आप सत्य क्यों हैं, उसमें कारण प्रदर्शन करते हैं,—

जिन बृहत्त्व बृंहणत्व धर्माक्रान्त ब्रह्म में आश्रित होकर तीन मायिक गुणों का, तमो रजः सत्त्वगुणों का, सर्ग-सृष्टि-भूत, इन्द्रिय देवतारूप अमृषा—सत्य है। अर्थात् जिनकी सत्यता से ही मिथ्या सर्ग भी सत्यवत् प्रतीत होता है, वह ही परम सत्य है।

उसमें दृष्टान्त यह है,—तेजः-वारि-मृत्तिका का पारस्परिक विनिमय जिस प्रकार होता है। विनिमय शब्द का अर्थ—व्यत्यय वि-अत्यय है, अर्थात् अन्य में अन्य की प्रतीति। वह जिस प्रकार अधिष्ठान सत्ता से सत्यवत् प्रतीत होता है, उस प्रकार ही जानना होगा। सूर्य्य तेज में वारि बुद्धि, मरीचिका में सुप्रसिद्ध है। मृत्तिकास्वरूप काच प्रभृति में वारि बुद्धि भी होती है, वारि में भी काच बुद्धि होती है। इस प्रकार सत्य आधार में अपर का धर्मारोप का दृष्टान्त स्वयं उद्भावनीय है।

अथवा उन परमेश्वर की ही परमार्थ सत्यता प्रतिपादन के निमित्त तद्भिन्न पदार्थों का मिथ्यात्व कहा है। जहाँ पर यह त्रिसर्ग मिथ्या ही है, किन्तु वस्तुतः सत् नहीं है। 'यत्र' जहाँ पर कहने से प्रतीत सम्बन्ध का निषेध हुआ है, अर्थात् उन परतत्त्व में आरोपित धर्मादि नहीं है, अर्थात् तद्गत समस्त ही स्वरूपभूत नित्य हैं। उसको दर्शाते हैं,—स्वेनैव धाम्ना—निज स्वाभाविक तेज के द्वारा ही कुहक, कपट, मायास्वरूप का निराकरण किया है, उस प्रकार ही परतत्त्व, नित्य स्वरूपभूतैश्वर्य्यादि शक्तिसमन्वित परमेश्वर तत्त्व ही ध्येय है।

स्वरूपलक्षण के द्वारा वस्तु प्रतिपादन के अनन्तर तटस्थलक्षण के द्वारा परमध्येय वस्तु का प्रतिपादन करते हैं। जन्मादीति—अस्य—परिदृश्यमान विश्व के जन्म-स्थिति-भङ्गरूप कार्य्य जिनसे होते रहते हैं, उनका ध्यान हम सब करें। उसमें कारण निर्देश करते हैं, अन्वयात्—अर्थात् अन्वय व्यतिरेक के द्वारा ही उक्त कार्य्य-कारण भाव निर्णीत होता है। अर्थेषु—आकाशादि कार्य्य में परमेश्वर सद्रूप में अनुस्यूत हैं। आकाशकुसुमरूप अकार्य्य से वह व्यावृत्त होता है, अथवा, अन्वय शब्द का अर्थ—अनुवृत्ति, एवं इतर शब्द का अर्थ—व्यावृत्ति है। कार्य्य में अनुवर्त्तन होने के कारण, सद्रूप ब्रह्म जगत् कारण हैं। मृन्मय सुवर्णमय में जिस प्रकार मृत्तिका एवं सुवर्ण का अनुवर्त्तन होता है, उस प्रकार ही विश्व के सहित ब्रह्म की अनुवृत्ति द्रष्टव्य है। अकार्य्य से व्यावृत्त होने के कारण—विश्व कार्य्य है, घट कुण्डल के समान, इस प्रकार जानना होगा।

अथवा सावयव होने के कारण जिससे विश्व के जन्मादि कार्य्य होते हैं। इस प्रकार वाक्य योजना करना कर्त्तव्य है।

श्रुति भी कहती है—जिनसे समस्त भूत उत्पन्न होते हैं, जिनसे उत्पन्न होकर जीवित रहते हैं, जो एकमात्र आश्रय हैं, जिनमें समस्त प्रविष्ट होकर रहते हैं, प्रभृति।

स्मृति भी कहती है—सृष्टि के आरम्भ में जिनसे समस्त भूत उत्पन्न होते रहते हैं, एवं युगक्षयरूप प्रलय के समय जिनमें समस्त पदार्थ आश्रित होकर रहते हैं। इस प्रकार कारण निर्वचन से क्या प्रकृति ही ध्येय है? कारण, सांख्यतन्त्र के अनुसार वह ही जगत् कारण है? कहते हैं—नहीं, प्रधान ध्येय नहीं है। वह कारण रूप परमतत्त्व अभिज्ञ हैं। अर्थात् कार्य्यविषयक ज्ञानेच्छा-कृति जिनमें स्वतःस्फूर्त्त रूप में है। प्रधान में उस प्रकार सम्भव नहीं है। श्रुति—लोक सृजनेच्छा से प्रकृति को निरीक्षण किया। उन्होंने समस्त लोक का सृजन किया। यह सब श्रुति विवरण से जानना होगा—परमेश्वर ही जगत् स्रष्टा हैं, जड़ा प्रकृति नहीं। ब्रह्मसूत्र कहते हैं—दर्शनवाचि ईक्ष धातु का प्रयोग होने के कारण, प्रधान जगत् कारण नहीं हो सकता है। तब क्या पुरुषरूप सांख्योक्त जीव ही ध्येय है, वह तो चेतन है? नहीं, परम ध्येय वस्तु स्वराट् हैं। स्वेनैव राजते यः, जो स्वतःसिद्ध ज्ञानवान् हैं, वह ही ध्येय हैं। तब क्या ब्रह्मा ध्येय हैं? श्रुति कहती है—हिरण्यगर्भ सर्वप्रथम आविर्भूत होकर समस्त भूतों का पति हुआ?

कहते हैं—नहीं, आदि कवि ब्रह्मा को भी जिन्होंने वेदात्मक ज्ञान प्रदान किया, श्रुति भी यह है—'जिन्होंने सर्वप्रथम ब्रह्मा को उत्पन्न किया, वेद अध्ययन कराया, आत्मबुद्धिप्रकाश देव की मैं शरण ग्रहण करता हूँ।' यदि कहो कि—अपर से वेदाध्ययन वृत्तान्त ब्रह्मा के पक्ष में प्रयोज्य नहीं हो सकता? उत्तर—परमेश्वर ने मन के द्वारा ही अर्थात् सङ्कल्प मात्र से ही ब्रह्मा के हृदय में वेदात्मक ज्ञान को उद्भासित किया।

उक्त संवाद से प्रतिपन्न हुआ है—यह श्रीमद्भागवत गायत्री का अर्थ से विमण्डित है। अग्रिम ग्रन्थ में ग्रन्थकार स्वयं ही कहेंगे,—जिन्होंने ब्रह्मा के हृदय में सरस्वती को प्रेरण कर सत् स्मृति को प्रकट किया, जिससे स्वलक्षण वेदात्मक शास्त्र का प्रादुर्भाव हुआ। वह ऋषिओं के अग्रणी पुरुषश्रेष्ठ मेरे प्रति प्रसन्न होवे। कह सकते हैं कि—ब्रह्मा ने सुप्तप्रतिबुद्ध न्याय से स्वयं ही वेदात्मक ज्ञान प्राप्त किया था। अध्ययन वृत्तान्त से प्रयोजन ही क्या है? नहीं, वेद विषयक ज्ञान स्वतः नहीं होता है। ऋषिगण अर्थबोध करने में मुग्ध हो जाते हैं। अतएव ब्रह्मा का भी ज्ञान स्वतःसिद्ध नहीं है। सबका ज्ञान परापेक्षासमन्वित है। केवल परमेश्वर का ज्ञान ही स्वतःसिद्ध है, अतः परमेश्वर ही जगत् कारण हैं। अतएव वह सत्य है, असत् को सत्ता प्रदान करते हैं। परमार्थ सत्यस्वरूप होने के कारण आप सर्वज्ञ हैं। तज्जन्य आप से कपटलक्षणा माया निरस्त होती है, अतः आप ध्येय हैं।

गायत्री मन्त्र के द्वारा प्रारम्भ होने से गायत्री का अर्थ रूप ब्रह्मविद्यात्मक ही यह श्रीमद्भागवत पुराण है, इस का प्रकाश ही उक्त शब्दों से हुआ।

मत्स्यपुराण के पुराण दान प्रस्ताव में वर्णित है—जिसमें गायत्री मन्त्र को अवलम्बन कर परमधर्म का वर्णन हुआ है, एवं वृत्रासुर बधोपाख्यान विन्यस्त है, उसको श्रीमद्भागवत जानना होगा। हेम सिंहासन समन्वित हस्तलिखित श्रीमद्भागवत का दान जो व्यक्ति भाद्रपौणमासी में करता हैं, वह विष्णुलोक को प्राप्त करता है। अष्टादशसहस्रात्मक श्लोकपूर्ण य ग्रन्थ है। पुराणान्तर में लिखित है—श्रीमद्भागवत ग्रन्थ अष्टादशसहस्र संख्यक श्लोक पूर्ण है। इसमें द्वादश स्कन्ध हैं। हयग्रीव ब्रह्मविद्या का वर्णन एवं वृत्रासुरोपाख्यान भी है। गायत्रीमन्त्र के द्वारा आरम्भ होने से ही पण्डितगण प्रस्तुत ग्रन्थ को श्रीमद्भागवत कहते हैं।

पद्मपुराण में अम्बरीष के प्रति गौतम का कथन इस प्रकार है—"हे अम्बरीष! शुकप्रोक्त श्रीभागवत का श्रवण नित्य करो, यदि भवक्षय करने का अभिलाषी हो, तो निज मुख से भी नित्य श्रीमद्भागवत का पाठ करो।" अतएव इससे अपर कोई भी श्रीमद्भागवत नामक पुराण है, इस प्रकार धारणा करना समीचीन नहीं है ॥१॥

### क्रमसन्दर्भः

श्रीश्रीकृष्णचैतन्यचन्द्राय नमः

अज्ञानतिमिरान्धस्य ज्ञानाञ्जन-शलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥१
श्रीमद्भागवतं नौमि यस्यैकस्य प्रसादतः। अज्ञातानपि जानाति सर्वः सर्वागमानपि ॥२
श्रीभागवतसन्दर्भान् श्रीमद्वैष्णवतोषणीम्। दृष्ट्वा भागवत-व्याख्या लिख्यतेऽत्र यथामति ॥३
यदत्र स्खलितं किञ्चिज्जायतेऽनवधानतः। ज्ञेयं न तत्तत्कर्तॄणां समाहर्तुर्ममैव तत् ॥४
येषां प्रोत्साहनेनास्मि प्रवृत्तोऽत्यन्तसाहसे। ते दीनानुग्रह-व्यग्राः शरणं मम वैष्णवाः ॥५

अथैवं सूचितानां श्रीकृष्णवाच्य-वाचकता-लक्षण-सम्बन्ध-तद्भजनलक्षणाभिधेय-तत्प्रेमलक्षण-प्रयोजनानामर्थानां निर्णयाय पूर्वं तत्त्वसन्दर्भादि-षट्सन्दर्भा निरूपिताः। अधुना तु श्रीमद्भागवत-क्रम-व्याख्यानाय, तत्रापि सम्बन्धाभिधेय-प्रयोजन-निर्णय-दर्शनाय च सप्तमः क्रमसन्दर्भोऽयमारभ्यते।

श्रीभागवतनिध्यर्थी टीका-दृष्टिरदायि यैः। श्रीधरस्वामिपादांस्तान् वन्दे भक्तचेकरक्षकान् ॥१
स्वामिपादैर्न यद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित्। तत्र तत्र च विज्ञेयः सन्दर्भः क्रम-नामकः ॥२
अथात्र परिभाषेयं ज्ञातव्या यद्यपेक्ष्यते। मूलं सटीकमङ्काद्यैः परिच्छेद्यं सहानया ॥३
अङ्का वाक्यान्त एवात्र देयाः पद्यान्ततो न तु। बहुपद्यैकवाक्यत्वे गर्भाङ्का बिन्दुमस्तकाः ॥४
यस्मिन् पद्ये नास्ति टीका तदप्यङ्केन योजयेत्। एकपद्यान्यवाक्यत्वे संख्याशब्दास्तु कान्तकाः ॥५
बहुपद्यैकवाक्यत्वेऽप्यमी ज्ञेयास्तथाविधाः। यथार्द्धकं युग्मकञ्च त्रिकमित्याद्युदाहृतिः ॥६

जन्माद्यस्येत्यत्र श्रीश्रीधरस्वामिचरणानामयमभिप्रायः।—परं परमेश्वरमिति, न पुनरभेदवादिनामिव चिन्मात्रं ब्रह्मेत्यर्थः—ध्येय-ध्यातृ-ध्यान-भेदावगमात्। सत्यमिति,—तदुपलक्षणत्वेन (तै० २।१।२) 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युक्तलक्षणमित्यर्थः;—(अथर्वशिरः उ० ३।५) 'अथ कस्मादुच्यते परं ब्रह्म ** बृंहति बृंहयति च' इति श्रुतेः, (वि० पु० १।१२।५७; ३।३।२१) 'बृहत्वाद्बृंहणत्वाच्च यद्ब्रह्म परमं विदुः' इति विष्णुपुराणाच्च; अत्रापि शक्तिमत्त्वेन ब्रह्म-शब्दस्य परमेश्वर-वाचकत्वात्। तत्र सत्यत्व-साधकम्—यत्र त्रिसर्गो मृषेति, यत्र यदाश्रयतयेत्यर्थः। अत्र दृष्टान्तः—तेज इति; तद्वद्यत्रारोपित इत्यर्थः। तदारोपकर्त्तृत्वं चास्माकं जीवानामेवेति लभ्यते; यत्रारोप्यते, तच्च परं यद्यचेतनं चेतनं वा स्यात्तदा जीवानामेवारोपकत्वेन तत्र स्वाज्ञानस्य त्रिसर्गस्य त्रिसम्बन्धो न स्यात्, किन्तु जीवेष्वेव मरीचिकादाविव जलादेस्तद्भ्रमहेत्वज्ञानस्य च। किन्त्वत्र तत्तु चेतनम्, अभिज्ञ इति, योजयिष्यमाणत्वात्; तत्रैव स्वराडित्यनेन ज्ञानरूपस्यापि स्वरूपज्ञानेनैव ज्ञातृत्वाङ्गीकाराच्च। ततो यद्व्यष्टयंशोपाधिकत्वेन जीवा भ्रान्ताः स्युस्तत्समष्ट्युपाधिकत्वेन स तु सुतरां तादृशः स्यादित्याशङ्कामनूद्य सिद्धान्तयति,—यत्रेत्यनेनेति। 'महसा' इति स्वतःसिद्धपरमज्ञानशक्तित्वेनेत्यर्थः,—तथाग्रे व्याख्यास्यमानत्वात्। स्वरूपमात्रे वाच्ये स्वशब्देनैव चरितार्थत्वात् कथञ्चित्तन्मात्रे वाच्येऽपि हेतुत्वलक्षणेन तृतीयार्थेन तच्छक्तित्वमेव बोधयेत्,—द्वितीयादीनां प्रातिपदिकाधिकार्थ एव विहितत्वात्। तस्य च ज्ञानोपाधिरूपत्वे स्वशब्द-वैयर्थ्यं स्यात्। कुहकमत्र मायोपाधिकृत-भ्रम-पराभवः—(भा० १।७।२३) "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुन-वचनात्; किन्तु यत्रेत्यनेन लब्धस्य परमेश्वरस्य चिन्मात्रेण स्वरूपांशेन सततानुभूयमान-स्वाभेदमेवालम्ब्य भ्रमाधिष्ठानत्वं स्वीकृतम्, परमेश्वरस्य तु ध्यातुमपि प्रार्थनीयतया स्वानुभवातीतत्वात्तदेकवस्तुत्वं व्याहन्येतेति विवेचनीयम्।

अथ तत्तत् सर्वं घटयितुं तटस्थलक्षणम्—जन्माद्यस्य यत इति। न तु मरीचिकादौ जलादिवत् केवलमारोपितं स्वतस्त्वन्यत्र सिद्धम्; किन्त्वनादिपरम्परया तत्रैव यदारोपितत्वम्, तन्मात्रसिद्धत्वाद्यत एवास्य जन्मादीति गम्यते,—तद्दृष्टान्तेनैव जन्मादि-सिद्धौ पुनरुक्तत्वापातात्। ततोऽस्य जन्मादौ हेतुः—अन्वयादितरतश्चार्थेष्विति; अत्र प्रथमोऽर्थस्त्वन्वयेन तस्यैव कारणत्व-बोधकः, व्यतिरेकेण तदकार्य्यस्यासत्त्व-बोधको ज्ञेयः। अत्र व्यतिरेक-पदेनार्थेतरदाक्षेपलब्धम्; तच्च ख-पुष्पादिरूपमिति तथा व्याख्यातम्। द्वितीयस्तृतीयश्च (अर्थः) तस्य कारणत्वं विश्वस्य कार्य्यत्वञ्च बोधयतीत्यत्र द्वितीये त्वर्थशब्दः कार्य्य-कारण-परः। कारणस्य स्वावस्थायां कार्य्यावस्थायाञ्चानुवृत्तत्वम्; कार्य्याणां तु परस्परं कारणावस्थायाञ्च व्यावृत्तत्वं ज्ञेयम्। एवं शून्यवादारम्भवादौ परिहृतौ।

तथा च वहिर्मुखप्रवृत्त्यर्थं युक्तीः प्रदर्श्यान्तर्मुखान् प्रति (ब्र० सू० १।१।३) 'शास्त्रयोनित्वात्' इति न्यायेन श्रुतीर्दर्शयति—तथा चेति; अत्र च (तै० ३।१।१) 'यतो वा इमानि भूतानि' इत्यादिवाक्यवद्-व्यतिरेकोऽपि ज्ञेयः,—(छा० ६।२।२) 'कथमसतः सज्जायेत' इत्यादेः। तत्र तस्य मरीचिका-दृष्टान्तेन प्राप्तमचेतनत्वं स्पष्टमेव निवारयन् परमतं प्रधानञ्च प्रत्याचष्टे,—तर्हीत्यादिना। अभिज्ञ इति; तत्रास्तु तावदचेतनत्वम्, अभि—सर्वतोभावेन च तज्ज्ञातृत्वं श्रूयत इत्यर्थः;—तत्तत्सर्व-विचारात्मकत्वादीक्षणस्य।

(ब्र० सू० १।१।५) 'ईक्षतेर्नाशब्दम्' इत्यस्यायमर्थः ।—परमतं प्रधानं विश्वकारणं न भवति ; न विद्यते शब्दः प्रमाणं यत्र, तथाभूतं हि तत् । कुतोऽशब्दत्वं तस्य ? तत्राह,—ईक्षतेरिति ;—स छब्दवाच्यकारण-व्यापाराभिधायित्वेन तत्रेक्ष्-धातोः श्रवणात् ; ईक्षणञ्च चेतन एव सम्भवति, प्रधानं त्वचेतनमिति । ननु यत्र त्रिसर्ग आरोप्यते, तद्ब्रह्मत्वचेतनम् ; यस्त्वारोपकर्त्ता जीवः, स खलु सर्वारोपकत्वाच्चेतनः सर्वज्ञश्च स्यात् ; तस्य च (छा० ६।२।३) 'बहु स्याम्' इत्यादि वाक्यं स्वाज्ञानकल्पितत्वेन स्वप्नद्रव्यवत् स्वाभेदा-पेक्षयेत्याशङ्क्याह,—तर्हि किं जीवः स्यादिति ; सिद्धान्तयति,—नेत्याहेति ; परसिद्ध-ज्ञानत्वेन सर्वज्ञत्वं सर्वस्रष्टृत्वञ्च न स्यात् ;—तस्मादन्तर्यामि-श्रुत्युक्त-तत्सिद्धज्ञानत्वेनारोपणकर्तृत्वमपि तत एव सिध्यतीति कर्तृत्वमपि तस्यैव स्यादिति भावः । तत्रोदाहरणाभासेन विरिञ्चेः स्वतःसिद्धज्ञानत्वमाशङ्क्याह,—तर्हि किमिति ; सिद्धान्तयति,—नेत्याह, तेन इतीति ।

तदेवं ज्ञानप्रदत्वेन मोक्षप्रदत्वमपि दर्शितम् । एवं जीवस्य तदज्ञानस्य च तस्मादत्यन्तभेद-प्राप्तावपि सिद्धान्तितम्,—सत्यमित्यनेनैव, तत्सत्तयैव सर्वसत्ता-स्वीकारात् ।

तदेवं सर्वसत्ताप्रदं सर्वाधिष्ठानं सर्वदोषास्पृष्टं स्वरूपसिद्ध-सर्वज्ञानादि-समवेतं सर्व-कर्तृ-मोक्षदातृ च सत्यानन्तज्ञानस्वरूपं परं ध्येयमिति वाक्यार्थः ।

स्वतःसिद्धज्ञानादित्वं शारीरक-भाष्यादौ च (ब्र० सू० १।१।५) 'ईक्षतेर्नाशब्दम्' इत्यत्र स्वीकृतम्,—प्रकृतिक्षोभात् पूर्वमीक्षानुपपत्त्या । मन्त्रौ चेमावुदाहृतौ—(श्वे० ३।१९) 'अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं न हि तस्य वेत्ता, तमाहुरग्र्यं पुरुषं पुराणम् ॥' इति ; (श्वे० ६।८) 'न तस्य कार्य्यं करणञ्च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च ॥' इति च ।

अत्राद्वैतवादिनः समादधते ;—यदि ज्ञेयं सत्यं स्यात्तदा तस्य ज्ञातृत्वमपि तथा स्यात् ; त्रिसर्गस्याज्ञान-कल्पितत्वादज्ञानस्य सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वादज्ञानिनो जीवस्य च तेनाज्ञानेनैव पृथक्प्रतीतत्वात् सत्यत्वं नास्त्येव ; ततो ज्ञातृत्वमपि तत्र नास्त्येव, तथा शक्त्यन्तरमपीति ।

वैष्णवास्तु तदभ्युगमवादेनैवं वदन्ति । तर्हि किं मिथ्यैवेदं जीवानां भातीत्यपि ज्ञानं तस्याव्यभिचारि स्यात्,—येन ज्ञानेन मृषा निरस्यते, तस्य तु सत्यत्वमेव स्यात् । किञ्च, विश्वकार्य्यान्यथानुपपत्त्या यथा परमकारणरूपं तदभ्युपगम्यते, तथा तच्छक्तिरपि स्वाभाविक्येवाभ्युपगम्येति,—कार्य्य-विशेषोत्पत्तौ किञ्चित्करत्वेनैव कारणतया वस्तुविशेषाङ्गीकारात् किञ्चित्करत्वमेव स्वाभाविकशक्तिरिति । तदेवमज्ञानातिरिक्त-स्वाभाविक-ज्ञानेन स्वगत-विशेषत्वे प्राप्ते (श्वे० ६।८) 'स्वाभाविकी ज्ञानबलक्रिया च' इति प्रतिपादितम् । तदेव स्वरूपशक्तिरिति सैव सर्वं भगवत्त्वं साधयेदिति तेने ब्रह्म हृदेति व्यञ्जितम् । (वृ० २।४।१०) 'अस्यैव महतो भूतस्य निश्वसितमेतद्यदृग्वेदः' इत्यादि-श्रुत्यन्तरं तस्य च निश्वसितस्याप्राकृतत्व-व्यञ्जकम् ; 'नासदासीन्नो सदासीत्' इति श्रुत्यन्तरञ्च समुदितं सत् तस्याप्राकृतमूर्तिमत्त्वमपि व्यञ्जयति । ततस्तन्निषेधस्तु प्राकृत-परिच्छिन्न-निषेधपर एव । यथोक्तं द्वितीयस्कन्धे वैकुण्ठवर्णने—(भा० २।९।१०) "न यत्र माया" इति, श्रीदशमे च—(भा० १०।२८।१५) "दर्शयामास लोकं स्वं गोपानां तमसः परम्" इति च । अतएवात्मारामाणामपि तच्छक्तिवैभवानुभवे परमानन्दविशेषो जायते—(भा० १।७।१०) "आत्मारामाश्च मुनयः" इत्यादिभ्यः । अतो जीवानां तादृश-शक्त्यैव तदीयरश्मिस्थानीयत्वेन नित्यसिद्धानां तन्मायावृत-ज्ञानानां तज्ज्ञानसिद्धये स एव ध्येय इति ।

तं धीमहीत्यादि । अत्रोद्धृत-मात्स्य-प्रमाणवचनेन गायत्रीशब्देन तत्सूचक-तदव्यभिचारि-'धीमहि'-पदसम्बलित-तदर्थ एवेष्यते ;—सर्वेषामपि मन्त्राणामादिरूपायास्तस्याः साक्षात्कथनानर्हत्वात् । तदर्थोऽपि स्पष्टः ;—जन्माद्यस्य यत इति प्रणवार्थः,—सृष्ट्यादि-शक्तिमत्तत्त्व-वाचित्वात् । यत्र त्रिसर्गो मृषेति

व्याहृति-त्रयार्थः,-- उभयत्रापि लोकत्रयस्य तदनन्यत्वेन विवक्षितत्वात्। स्वराड़िति सवितृप्रकाशक-परम-तेजोवाचि। तेने ब्रह्महृदेति बुद्धिवृत्तिप्रेरणा-प्रार्थना सूचिता;— तदेव कृपया स्व-ध्यानाय बुद्धिवृत्तिं प्रेरयतादिति भावः। तच्च तेजस्तन्न (ब्र० सू० १।१।२०) 'अन्तस्तद्धर्मोपदेशात्' इत्यादि-संप्रतिपन्नं तन्मूर्तम्, तदाद्यनन्त-मूर्त्तिमदेव ध्येयमिति। तदेवमग्निपुराणे गायत्र्यर्थः श्रीभगवानेवाभिमतः। तद्वचनानि श्रीतत्त्वसन्दर्भे द्रष्टव्यानि; अत्रैवाग्रे दर्शयितव्यानि।

(भा० दी० धृत-मात्स्यवाक्ये) 'धर्मविस्तरः' इत्यत्र धर्म-शब्दः परम-धर्मपरः,—"धर्मः प्रोज्झितकैतवोऽत्र परमः" इत्यत्र प्रतिज्ञातत्वात्। स च भगवद्ध्यानादिलक्षण एवेति व्यक्तीभविष्यति। 'वृत्रासुरबधोपेतम्' इति,--तस्य परमभागवतत्वात्तद्वधरूपस्य चरित्रस्य श्रीभागवत-लक्षणत्वेन धृतेः। पुराणान्तरे वामनसंज्ञे हयग्रीव-ब्रह्मविद्येति वृत्रासुरबध-साहचर्य्येण नारायणवर्मैवोच्यते। हयग्रीव-शब्देन ह्यत्राश्वशिरा दधीचिरेव लभ्यते; तेनैव च प्रवर्तिता नारायणवर्माख्या ब्रह्मविद्या (भा० ६।८।४—३५)। तस्याश्वशिरस्त्वं षष्ठे (भा० ६।९।५१) "यद्वा अश्वशिरो नाम" इत्यत्र प्रसिद्धम्; नारायणवर्मणो ब्रह्मविद्यात्वञ्च;—(तत्रैव भा० दी०) 'एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः। प्रवर्ग्यं ब्रह्मविद्याञ्च सत्कृतोऽसत्यशङ्कितः।' इत्यत्र टीकोत्थापित-वचनेन चेति। एवं स्कान्दे प्रभासखण्डे (२।३९—४२) च—'यत्राधिकृत्य गायत्रीम्' इत्यादि; 'सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः। तद्वृत्तान्तोद्भवं लोके तच्च भागवतं स्मृतम्॥ लिखित्वा तच्च' इत्यादि; 'अष्टादशसहस्राणि' इत्यन्तञ्च।

श्रीमद्भागवतस्य श्रीमद्भागवत्प्रियत्वेन भागवताभीष्टत्वेन च परमसात्त्विकत्वमाह,—'पद्मपुराणे' इति। तत्रैव च श्रीगौतमस्याम्बरीषं प्रति प्रश्नः—पुराणं त्वं भागवतं पठस्व पुरतो हरेः। चरितं दैत्यराजस्य प्रह्लादस्य च भूपतेः॥' तत्र वञ्जुली-माहात्म्ये तस्य तस्मिन्नुपदेशः—'रात्रौ तु जागरः कार्य्यः श्रोतव्या वैष्णवी कथा। गीता नामसहस्रञ्च पुराणं शुक-भाषितम्। पठितव्यं प्रयत्नेन हरेः सन्तोषकारणम्॥' इति; स्कान्दे प्रह्लाद-संहितायां द्वारका-माहात्म्ये—'श्रीमद्भागवतं भक्त्या पठते हरिसन्निधौ। जागरे तत्पदं याति कुलवृन्द-समन्वितः॥' इति।

एवं श्रीतत्त्ववादिधृते गारुड़वचने च—('......पूर्णः सोऽयमतिशयः। अर्थोऽयं ब्रह्मसूत्राणां भारतार्थ-विनिर्णयः॥ गायत्रीभाष्यरूपोऽसौ वेदार्थ-परिबृंहितः। पुराणानां सामरूपः साक्षाद्भगवतोदितः॥ द्वादशस्कन्धयुक्तोऽयं शतविच्छेद-संयुतः। ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः॥' इति।

अत्र 'ब्रह्मसूत्राणामर्थः' तेषामकृत्रिम-भाष्यभूत इत्यर्थः। तस्मात्तद्भाष्यभूते स्वतःसिद्धे तस्मिन् सत्यर्वाचीनमन्यदन्यद्भाष्यं स्वस्व-कपोल-कल्पितं तदनुगतमेवादरणीयमिति गम्यते। 'भारतार्थ-विनिर्णयः' —भारतस्यार्थ-विनिर्णयो यत्र सः;—भगवत्येव तात्पर्य्यात्तस्यापि। यद्वा, भारतार्थस्य विनिर्णयो वेदार्थतुल्यत्वेन विशिष्य निर्णयो यत्रेति यस्मादेव श्रीभगवत्परस्तस्मादेव गायत्री-भाष्यरूपोऽसाविति।

यत्तु द्वादशे (भा० १२।६।६७) "ॐ नमस्ते" इत्यादि-गद्येषु तदर्थत्वेन सूर्यः स्तुतः, तत्तु परमात्मदृष्ट्यैव, न तु स्वातन्त्र्येणेत्यदोषः। तथैवाग्रे श्रीशौनक-वाक्यम्—(भा० १२।११।२८) "ब्रूहि नः श्रद्दधानानां व्यूहं सूर्य्यात्मनो हरेः" इति। न चास्य भर्गस्य सूर्य्यमण्डलमात्राधिष्ठानत्वम्,—मन्त्रे 'वरेण्य'-शब्देनात्र च ग्रन्थे पर-शब्देन पारमैश्वर्य्यपर्यन्तताया दर्शितत्वात्। तदेवमग्निपुराणेऽप्युक्तम्,—(२१६।१५) 'ध्यानेन पुरुषोऽयञ्च द्रष्टव्यः सूर्यमण्डले। सत्यं सदाशिवं ब्रह्म तद्विष्णोः परमं पदम्॥' इति। अथ 'श्रीमद्भागवताभिधः' इति,—भागवतत्वं भगवत्प्रतिपादकत्वम्; श्रीमत्त्वं भगवन्नामादेरिव तादृश-स्वाभाविक-शक्तिमत्त्वम्,—नित्ययोगे मतुप्; अतः समस्ततयैव निर्दिश्य नीलोत्पलवत्तन्नामत्वमेव बोधितम्; अन्यथा त्वविमृष्टविधेयांशता-दोषः स्यात्। अतएवोक्तम्—"श्रीमद्भागवते महामुनिकृते" इति। टीकाकृद्भिरपि (भा० दी० मङ्गलाचरणे) 'श्रीमद्भागवताभिधः' इति। अतः क्वचित् केवल-भागवताख्यत्वं तु 'सत्यभामा सत्या' इतिवत्।

'वेदार्थपरिवृंहितः' इति—वेदार्थस्य परिवृंहणं यस्मात्; तत्रोक्तम्—(महाभा० आदि-प० १।२६७; वायु-पु० १।२००) 'इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्' इत्यादि। 'पुराणानां सामरूपः' इति—वेदेषु सामवत् 'सर्वेषु पुराणेषु श्रेष्ठ इत्यर्थः। 'साक्षाद्भगवतोदितः' इति (भा० १२।१३।१९) "कस्मै येन विभाषितोऽयम्" इत्युपसंहार-वाक्यानुसारेण ज्ञेयम्। 'शतविच्छेदसंयुतः' इति विस्तरभिया न विव्रियते।

तदेवं श्रीमद्भागवतं सर्वशास्त्र-चक्रवर्ति-पदमाप्तमिति स्थिते हेमसिंहासनारूढमिति तैर्यद्व्याख्यातम्, तदेव युक्तम्। अतः श्रीमद्भागवतस्यैवाभ्यासावश्यकत्वं श्रेष्ठत्वञ्च 'सम्वत्सरप्रदीप'-धृत-स्कान्दवचने (विष्णुखण्डे मार्गशीर्ष-माहात्म्ये १६श-अ० ४०, ४२, ४४, ३३) निर्णीतम्,—'शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः। न यस्य तिष्ठते गेहे शास्त्रं भागवतं कलौ॥' 'कथं स वैष्णवो ज्ञेयः केवलं दाम्भिकः स्मृतः। गृहे न तिष्ठते यस्य स विप्रः श्वपचाधमः॥' 'यत्र यत्र भवेद्विप्र शास्त्रं भागवतं कलौ। तत्र तत्र हरिर्याति त्रिदशैः सह नारद।' 'यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने। अष्टादश-पुराणानां फलं प्राप्नोति मानवः॥' इति।

तदेवं परमार्थविवित्सुभिः श्रीमद्भागवतमेव साम्प्रतं विचारणीयमिति स्थितम्। अतएव सत्स्वपि नानाशास्त्रेष्वेतदेवोक्तं (भा० १।३।४३) "कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः" इति; अर्कतारूपकेण तद्विना नान्येषां सम्यग्वस्तुप्रकाशकत्वमिति प्रतिपद्यते; यस्यैव श्रीमद्भागवतस्य भाष्यभूतं श्रीहयशीर्ष-पञ्चरात्रे शास्त्रकथनप्रस्तावे गणितं 'तन्त्रभागवता'भिधं तन्त्रम्;—यस्य साक्षात् 'हनुमद्भाष्य'-'वासना-भाष्य'-'सम्बन्धोक्ति'-'विद्वत्कामधेनु'-'तत्त्वदीपिका'–'भावार्थदीपिका'–'परमहंसप्रिया'–'चित्सुखी'–'शुकहृदय' इत्यादयो व्याख्याग्रन्थास्तथा 'मुक्ताफल'-'हरिलीला'-'भक्तिरत्नावली' इत्यादयो निबन्धाश्च विविधा एव तत्तन्मत-प्रसिद्ध-महानुभावकृता विराजन्ते;—यदेव च 'हेमाद्रि'-कृत-ग्रन्थस्य ('चतुर्वर्गचिन्तामणेः') दानखण्डे पुराणदान-प्रस्तावे मत्स्यपुराणीय-तल्लक्षणवृत्त्या प्रशस्तम्। हेमाद्रिकृतग्रन्थस्य परिशेषखण्डस्य कालनिर्णये च कलियुगधर्म-निर्णये—(भा० ११।५।३६) "कलिं सभाजयन्त्यार्याः" इत्यादिकं यद्वाक्यत्वेनोत्थाप्य यत्प्रतिपाद्य-धर्म एव-कलावङ्गीकृतः; 'संवत्सर-प्रदीपे' च तत्कर्त्रा 'शतशोऽथ सहस्रशः' इत्यादिकं प्राग्दर्शित-स्कान्द-वचनजातमुत्थाप्य सर्वकलिदोषतः पावित्र्याय कतिचिच्छ्रीमद्भागवत-वचनानि लेख्यानीति लिखितानि।

अतएव सर्वगुणयुक्तत्वमस्यैव दृष्टम्—"धर्मः प्रोज्झितकैतवः" इत्यादौ, 'वेदाः पुराणं काव्यञ्च प्रभुर्मित्रं प्रियेव च। बोधयन्तीति हि प्राहुस्त्रिवृद्भागवतं स्मृतम्॥' इति 'हेमाद्रि'-वचने (वस्तुतः 'श्रीवोपदेव'-कृत-'हरिलीला'-वाक्ये) चेति। मात्स्यादीनां यत् पुराणाधिक्यं श्रूयते, तत् त्वापेक्षिकमिति।

तदित्थं सर्वमभिप्रेत्य महोपक्रम-श्लोकमेव श्रीविष्णुपुराणीय-भगवच्छब्द-निरुक्तिवत् साक्षाच्छ्रीकृष्णा-भिधेयत्वेनापि योजयति,—जन्माद्यस्येति। (वृहत्सहस्रनामस्तोत्रे) 'नराकृति परं ब्रह्म' इति पुराणवर्गात्, (गो० ता० पू० ५२) 'तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्' इति श्रीगोपालतापनीश्रुतेश्च, परं श्रीकृष्णं धीमहि। अस्य स्वरूपलक्षणमाह,—सत्यमिति; (भा० १०।२।२६) "सत्यव्रतं सत्यपरं त्रिसत्यम्" इत्यादौ, (महाभा० उद्यम प० ७०।१२) 'सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम्। सत्यात् सत्यश्च गोविन्दस्तस्मात् सत्यो हि नामतः॥' इत्युद्यमपर्वणि सञ्जयकृत-श्रीकृष्णनाम्नां निरुक्तौ च तथा श्रुतत्वात्;—एतेन तदाकारस्याव्यभिचारित्वं दर्शितम्। तटस्थलक्षणमाह,—धाम्ना स्वेनेत्यादि; स्वेन स्व-स्वरूपेण, धाम्ना श्रीमथुराख्येन च सदा निरस्तं कुहकं मायाकार्य-लक्षणं येन तम्;—(गो० ता० उ० ६६) 'मथ्यते तु जगत् सर्वं ब्रह्मज्ञानेन येन वा। तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते॥' इति श्रीगोपालोत्तरतापनी-प्रसिद्धेः। लीलामाह,—आद्यस्य नित्यमेव श्रीमद्व्रजेन्द्र-श्रीमदानकदुन्दुभि-नन्दनतया श्रीगोकुल-मथुरा-द्वारकासु विराजमानस्यैव स्वस्य कस्मैचिदर्थाय लोके प्रादुर्भावापेक्षया'यतः' श्रीमदानकदुन्दुभि-गृहाज्जन्म, तस्माद्य इतरतश्चेतरत्र श्रीव्रजेश्वर-गृहेऽप्यन्वयात् पुत्रभावतस्तदनुगतत्वेनागच्छद्; —उत्तरेणैव य इति पदेनान्वयः;

यत इत्यनेन तस्मादिति स्वयमेव लभ्यते। कस्मादन्वयात्? तत्राह,—अर्थेषु कंसवञ्चनादिषु तादृश-भाववद्भिः श्रीगोकुलवासिभिरेव सर्वानन्द-कदम्ब-कादम्बिनीरूपा सा सा कापि लीला सिध्यतीति तल्लक्षणेषु वार्थेष्वभिज्ञः; ततश्च स्वराट्—स्वैर्गोकुलवासिभिरेव राजत इति। तत्र तेषां प्रेमवशतामापन्नस्याप्य-व्याहतैश्वर्य्यमाह,—तेन इति; य आदिकवये ब्रह्मणे ब्रह्माणं विस्मापयितुं हृदा सङ्कल्पमात्रेणैव ब्रह्म (भा० १०।१३।५४)—'सत्यज्ञानानन्तानन्दमात्रैकरस-मूर्ति'-मयं वैभवं तेने विस्तारितवान्। यद्यतस्तथाविध-लौकिकालौकिकसमुचित-लीला-हेतोः सूरयस्तद्भक्ता मुह्यन्ति,—प्रेमातिशयोदयेन वैवश्यमाप्नुवन्ति। यदित्युत्तरेणाप्यन्वयाद् यद्यत एव तादृश-लीलातस्तेजो-वारि-मृदामपि यथा यथावद्विनिमयो भवति। यत्र तेजसश्चन्द्रादेर्विनिमयो निस्तेजो-वस्तुभिः सह धर्मपरिवर्तः,—तच्छ्रीमुखादि-रुचा-चन्द्रादेर्निस्तेजस्त्वभिधाना-न्निकटस्थ-निस्तेजोवस्तुनः स्वभासा तेजस्वितापादनाच्च; तथा वारि द्रवश्च कठिनं भवति वेणुवाद्येन मृत्पाषाणादिश्च द्रवतीति; यत्र श्रीकृष्णे; त्रिसर्गः श्रीगोकुल-मथुरा-द्वारका-वैभव-प्रकाशोऽमृषा सत्य एवेति॥१॥

## विनोदिनी

जिन्होंने ज्ञानाञ्जनशलाका के द्वारा अज्ञानतिमिरान्ध का नयनोन्मीलित किया है, उन श्रीगुरुदेव को मैं प्रणाम करता हूँ॥१

श्रीमद्भागवत को मैं प्रणाम करता हूँ, एकमात्र जिनकी प्रसन्नता से ही समस्त शास्त्रस्थित अज्ञात वस्तु का परिज्ञान करने में समस्त मानव सक्षम होते हैं॥२

मैं निज निश्चयात्मिका बुद्धि के अनुसार श्रीमद्भागवत सन्दर्भ समूह को एवं श्रीमद्वैष्णवतोषणी को अवलोकन कर श्रीमद्भागवत की व्याख्या लिख रहा हूँ॥३

अनवधानवशतः जो कुछ स्खलन प्रस्तुतकृति में होगा, वह स्खलन समाहरण कर्त्ता मेरा ही है, किन्तु उन उन ग्रन्थकर्त्ता का नहीं है॥४

जिन सब के प्रोत्साहन से मेरी दुःसाहसिक प्रवृत्ति दुष्कर कार्य्य में हुई है, वे सब दीनानुग्रहव्यग्र वैष्णववृन्द ही मेरी शरण हैं॥५

अनन्तर श्रीमद्भागवत ग्रन्थ में वर्णित—ग्रन्थ का वाच्य श्रीकृष्ण, वाचक श्रीमद्भागवत, अर्थ के सहित ग्रन्थ का वाच्य-वाचक भाव सम्बन्ध, श्रीकृष्ण भजनस्वरूप ही अभिधेय 'साधन' एवं श्रीकृष्णप्रेम स्वरूप प्रयोजन विषयों का निर्णय करने के निमित्त इतःप्राक् तत्त्व-भगवत्-परमात्म-श्रीकृष्ण-भक्ति-प्रीति नामक षट्सन्दर्भ ग्रन्थ का प्रणयन हुआ है। सम्प्रति श्रीमद्भागवतोक्त श्लोकसमूह की क्रमशः व्याख्या करने के निमित्त उद्यम कर रहा हूँ। उसमें भी सम्बन्धाभिधेय-प्रयोजन-निर्णय प्रदर्शन हेतु क्रमसन्दर्भ नामक सप्तसन्दर्भ का प्रारम्भ मैं कर [illegible] हूँ।

श्रीमद्भागवत ग्रन्थ [illegible] अर्थ-निधिसमूह को अवलोकन करने के निमित्त जिन्होंने टीका दृष्टि प्रदान की है, एकमात्र भक्तिमार्गसंरक्षक श्रीधरस्वामिपाद को मैं प्रणाम करता हूँ॥१

श्रीस्वामिपाद ने जहाँ पर व्यक्त रूप से नहीं कहा, कहने पर भी जहाँ अस्फुट रूप से कहा, उस उस स्थल पर मैं विशेष विवेचन करूँगा, अतः इस ग्रन्थ को सुधीगण क्रमसन्दर्भ नाम से जानेंगे॥२

यहाँ पर परिभाषा का ज्ञान भी अपेक्षित है, मूल टीका अङ्क प्रभृति का ज्ञान भी इसके सहित करना आवश्यक है॥३

वाक्य के अन्त में ही अङ्क संख्या विन्यस्त होगी, पद्य के अन्त में नहीं। बहु पद्य के द्वारा एक वाक्य होने पर मस्तक में बिन्दुयुक्त गर्भाङ्क होगा॥४

जिस पद्य में टीका नहीं है, उसको भी अङ्कविन्यास के द्वारा सूचित करेंगे। अन्य वाक्य बोधन के निमित्त 'तु' शब्द का प्रयोग होगा॥५

अनेक पद्यों के द्वारा एकवाक्य होने पर भी उक्त नियम को जानना होगा, तथा अर्द्ध, युग्मक, त्रिक का परिज्ञान भी उक्त सङ्केत से ही करें ।।६

'जन्माद्यस्य' श्लोक की व्याख्या में श्रीस्वामिपाद का कथनाभिप्राय यह है—'परं धीमहि' आपने 'परं' शब्द का परमेश्वर अर्थ किया है। किन्तु अभेद-वादियों का स्वीकृत चिन्मात्र ब्रह्म श्रीमद्भागवत का प्रतिपाद्य नहीं है। कारण—जन्माद्यस्य श्लोक में ध्येय-ध्यानकर्त्ता एवं ध्यान का सुस्पष्ट उल्लेख है। निर्गुणवादी के मत में ध्येय धातृ ध्यान का वर्णन असम्भव है। भेद में उपासना होती है, अभेद में उपासना का प्रसङ्ग ही नहीं होता है। 'सोऽहं ब्रह्म' स्थल में उपास्योपासकोपासना की विरति हो जाती है। 'सत्यं' शब्द से उपलक्षण रीति से तैत्तिरीयकोक्त २।१।२—'सत्यं ज्ञानमनन्तं ब्रह्म' का कथन ही हुआ है। अथर्वशिरा उपनिषत् ३।५ में उक्त है—परं ब्रह्म को कैसे कहा जायेगा ? जो सबसे वृहत् हैं, एवं सबको वृहत् कर सकते हैं, वह ही ब्रह्म हैं। श्रुति का कथन वैसा ही है। विष्णुपुराण में लिखित है—वृहत्व एवं वृंहणत्व के कारण ही परतत्त्व को ब्रह्म शब्द से सुधीगण जानते हैं। यहाँ पर भी शक्तिमत्त्व के कारण ही ब्रह्म शब्द से परमेश्वर का बोध हुआ। सत्यत्व का साधक ही—'यत्र त्रिसर्गो मृषा' वाक्य है। अर्थात् जिनको आश्रय कर ही त्रिगुणात्मिका माया की सृष्टि रहती है। उसमें दृष्टान्त का उपन्यास करते हैं,—'तेजो वारि मृदां यत्र विनिमयः' जिस प्रकार परस्पर में पारस्परिक धर्म का आरोप होता है, उस प्रकार ही आरोपित है, हम सब जीवों के द्वारा वह आरोप नहीं हुआ है। इस अर्थ का लाभ उक्त पद से ही होता है।

जहाँ आरोप होता है, वह परमतत्त्व यदि अचेतना प्रकृति होती है, अथवा चेतन जीव होता है—तब तो आरोपक जीव ही होगा, वहाँ स्वाज्ञानरूप मायिक सृष्टित्रय का सम्बन्ध होना सम्भव नहीं होगा। किन्तु जीव में जिस प्रकार अज्ञान का आरोप होता है, अर्थात् देह में आत्मबुद्धि होती है, उस प्रकार मरीचिकादि में भी जलादि का आरोप होता है, उक्त स्थलों में जो भ्रम होता है, उसके प्रति जो कारण अज्ञान है, वह सत् वस्तु के ऊपर ही होता है, एवं उभय पदार्थ का अनुभवी व्यक्ति के द्वारा ही होता है। आकाश एवं कुसुम की नित्यता है, पदार्थ प्रसिद्ध है, किन्तु आकाश में कुसुमत्व का आरोप ही भ्रम है। चेतन व्यक्ति के द्वारा वह सम्बन्ध आरोपित होता है। किन्तु अचेतना प्रकृति स्वयं में आरोप कर नहीं सकती है। आरोप कार्य्य के प्रति पदार्थ विषयक अभिज्ञता की आवश्यकता होती है। यदि चेतन पुरुष को आरोपक कहा जाय, वह भी सम्भव नहीं है। वह पुरुष सर्वथा ज्ञानवान् नहीं है। अतएव श्रीभागवतोक्त ध्येय पदार्थ—सर्वज्ञ सर्ववित् है, समस्त कार्य्य में अभिज्ञ है, उपादान ज्ञान चिकीर्षा एवं कृतिमत्त्व भी उनमें स्वतःसिद्ध है। इसका प्रतिपादन ही सम्पूर्ण ग्रन्थ में एवं 'जन्माद्यस्य' नामक मङ्गलाचरण श्लोक में है। उसमें वह ध्येय परमतत्त्व स्वराट् है, स्वप्रकाश है, अपर के द्वारा प्रकाशित नहीं होता है। जिस प्रकार सूर्य्य स्वप्रकाश है। वह अद्वय ज्ञानस्वरूप होने पर भी स्वरूपभूत ज्ञान के द्वारा ही उनमें ज्ञातृता है। सूर्य्य में स्व-पर प्रकाशकत्व जिस प्रकार स्वरूपभूत है, उस प्रकार परमतत्त्व ज्ञानस्वरूप में भी ज्ञातृता स्वीकृत है। अन्यथा असमाधेय दोष प्रसङ्ग होता है।

यदि कहा जाय कि—अद्वयज्ञानतत्त्व ब्रह्म है, वह स्वयं भ्रान्त हो जाता है, एवं प्रकृतिगत व्यष्टि उपाधि को ग्रहण कर जीव संज्ञा को प्राप्त करता है। इस प्रकार से अविद्या के द्वारा अनेक जीव होते हैं, उस संज्ञा-संज्ञी भी भ्रम है। किन्तु कूटकार्षापण के द्वारा जिस प्रकार सामयिक व्यवहार निष्पन्न होता है, तद्वत् ही व्यवहारिक जीव संज्ञा के द्वारा शास्त्रादि एवं सृष्टि प्रभृति का निर्वाह होता है। उस प्रकार ही अविद्यागत समष्टि उपाधि को ग्रहण कर भ्रान्त ब्रह्म ईश्वर सर्वज्ञ हो जाता है। अतएव वह 'परं' शब्द वाच्य होकर ध्येय होगा, क्योंकि वह भ्रान्त ब्रह्म परमेश्वर आख्या से विभूषित होकर व्यवहारिक सृष्ट्यादि

कार्य्य निष्पन्न करता है।

उसका निरास करते हुए कहते हैं—जिस अधिष्ठान में त्रिसर्ग मिथ्या ही है, वस्तुतः स्थितिशील नहीं है, अर्थात् शक्तिमत् परमतत्त्व ही सत्य है, उनमें आश्रित होकर पुरुष के केश नखादि के समान यह सृष्टि होती है।

यत्र शब्द के द्वारा प्रतीत उपाधिसम्बन्ध का निवारण करते हैं। अर्थात् उक्त परतत्त्व में उपाधि सम्बन्ध नहीं है। अर्थात् वह व्यवहारिक पारमार्थिक संज्ञा से विभूषित नहीं होता है। वह नित्य स्वरूपभूत ज्ञानवान् है। उसका स्थापन ही मूलोक्त 'स्वराट्' शब्द से हुआ है। भ्रान्त ब्रह्म का व्यवहारिक पारमार्थिक होना मायाधीन है। अद्वय तत्त्व में द्वितीय पदार्थ का अभाव स्वतः ही रहता है। उसमें भी निरीह में कैसे अज्ञान की अवतारणा होगी। द्वितीय पदार्थ ही कहाँ, एवं आरोप करने की इच्छा भी कैसे होगी। भ्रम स्थल में रज्जु प्रसिद्ध है, सर्प भी मारात्मक रूप में प्रसिद्धानुभूत है। अनुभवी व्यक्ति मानसिक चञ्चलता से सादृश्य महिम्ना उसे आरोप कर लेता है। प्रस्तुत स्थल में वैसा सम्भव नहीं है। अतएव कहते हैं—स्वराट्, स्वेनैव धाम्ना—महसा निरस्तं कुहकं—कपटं, मायालक्षणं यस्मिन् तम्। महसा शब्द का अर्थ है—स्वतःसिद्ध परम शक्ति के द्वारा, उसकी व्याख्या अग्रिम १०।१४ में करेंगे। अतः परमतत्त्व—स्वतः ज्ञानादि शक्ति मण्डित है। 'स्वराट्' शब्द का अर्थ—निर्गुण ब्रह्म मानने पर केवल 'स्वराट्' शब्द प्रयोग व्यर्थ होगा। कारण उक्त अर्थ का निर्वाह केवल 'स्व' पद से ही होता है। यदि कष्टकल्पना के द्वारा स्वराट् शब्द का स्वप्रकाश अर्थ किया जाय, एवं उक्त स्वप्रकाश की विभिन्न व्युत्पत्ति के मध्य में एक अर्थ केवल निर्गुण पर भी होना सम्भव हो, तो भी 'स्वेनैव राजते' स्वराट् पद होगा। उक्त पद में जो तृतीया विभक्ति है, उससे उस वस्तु की निजी शक्ति का बोध ही होगा। द्वितीयादि विभक्ति का प्रयोग प्रातिपादिकाधिकार्थ में विहित है। उसमें यदि ज्ञान को स्वरूपभूत न मानकर उपाधिभूत माने तो स्व-शब्द ही व्यर्थ हो जायेगा।

कुहक शब्द का अर्थ यहाँ पर—मायिक उपाधिकृत भ्रमपर है। उसको विदूरित करने की शक्ति परतत्त्व में निजी है। भा० १।७।२३ में श्रीअर्जुन ने कहा है,—निज चिच्छक्तिरूप स्वरूपशक्ति के द्वारा कपटलक्षण माया प्रभाव को विदूरित करके निज स्वरूपशक्ति के सुविलासाकर में प्रतिष्ठित रहते हैं। अतएव परतत्त्व उपास्य हैं, कारण जीवगत अज्ञान विदूरित करने की उनमें निजी शक्ति है, जो अज्ञानग्रस्त स्वयं है, वह न-तो उपास्य होता, न-तो दूसरे को अज्ञान मुक्त ही कर सकता है। किन्तु 'यत्र त्रिसर्गो मृषा' यहाँ के यत्र पद से नित्य स्वरूपशक्तिपूर्ण परमेश्वर का ही बोध होता है। किन्तु वह जब मुक्तिप्रार्थी का अवलम्बनीय चिन्मात्ररूप स्वरूपांश के सहित सतत अनुभूत स्वाभेद है, उसको अवलम्बन करके ही परतत्त्व को भ्रमाधिष्ठान माना गया है। किन्तु स्वरूपभूत निखिल गुणमण्डित परमेश्वर का ध्यान ध्यानकारी व्यक्ति करता है, एवं उनका कैङ्कर्य्य की कामना कर उनको नित्य चाहता है। अतएव स्वरूप बोधरूप अभेद भावना को छोड़कर अपर भावना में परमेश्वर नित्य विराजित हैं। अतएव स्वरूपावबोध में जिस प्रकार धातृ-ध्येय-ध्यान नहीं है, उस प्रकार परमेश्वरत्व स्वरूपावबोध में नहीं है। इसमें वस्तुत्रय की नित्य स्थिति है। अतएव केवल निर्गुण एक वस्तु का निर्वचन बाधित होगा। कारण द्वितीय श्लोक में भा० १।१।२ में "वेद्यं वास्तवमत्र वस्तु शिवदं" कहेंगे। उसमें "वास्तवं परमार्थभूतं वस्तु वेद्यं, यद्वा, वास्तव शब्देन वस्तुनोऽंश जीवः, वस्तुनः शक्तिर्माया च वस्तुनः कार्य्यं जगच्च, तत् सर्वं वस्त्वेव न ततः पृथगिति वेद्यम्" वास्तव वस्तु को पारमार्थिक कहा गया है। वह अन्तरङ्गा वहिरङ्गा तटस्था शक्तिपूर्ण है। उक्त विषय की विवेचना इस रीति से करना आवश्यक है।

अनन्तर पूर्वोक्त परमेश्वर विषयक समस्त पदार्थ का समन्वय लक्ष्य में करने के निमित्त तटस्थलक्षण को कहते हैं। कार्य्य को देखकर जिनका ज्ञान होता है, वह तटस्थ लक्षण है। यह स्वरूप से बाहर

रह कर वस्तु का परिचायक होता है। जिनसे विश्व की उत्पत्ति-स्थिति-विनष्टि होती है। वास्तव वस्तु का उक्त त्रिविधत्व सम्भव है। वह कार्य्य वास्तव है, किन्तु मरीचिकादि में आरोपित जल के समान भ्रमात्मक नहीं है। स्वाभाविक नित्य सृष्टि वैकुण्ठादि में है। किन्तु अनादि परम्परा से ही जन्मादि कर्त्तृत्व परमेश्वर में आरोपित है। अतएव समस्त शक्तियों का एकमात्र परमाश्रयभूत परमेश्वर होने से ही कहा है, उनसे ही जन्मादि होते हैं। आरोप मात्र से ही जन्मादि निष्पन्न होने पर 'यतः' पञ्चमी विभक्त्यन्त पद प्रयोग व्यर्थ होगा, कथन के पश्चात् उसको कहना अनर्थक होता है। जन्मादि के प्रति आप हेतु हैं—उसको दर्शाते हैं, 'अन्वयात् इतरतश्च अर्थेषु' प्रथमतो अन्वय से ही परमेश्वर कारण होते हैं। सत्य कारण से उत्पन्न वस्तुसमूह उस सत्य का अनुसरण परायण होते हैं। जिस प्रकार मृण्मय हिरण्मय वस्तु समूह हैं, अभाव रूप व्यतिरेक से जो कार्य्य होता है, वह सत् नहीं है। यहाँ व्यतिरेक पद से अर्थभिन्न को जानना होगा। वह आक्षेपलभ्य है। वह ख-पुष्पादिवत् है। स्वामिपाद ने वही व्याख्या की है। द्वितीय एवं तृतीय अर्थ भी परमेश्वर की जगत् कारणता सूचक है। एवं विश्व उनकी कार्य्यता का सूचक है। अतः प्रथम द्वितीय तृतीय—स्वामिपादकृत व्याख्याविकल्प को जानना होगा।

प्रथम—तत्र हेतुः, अन्वयादितरतश्च अर्थेषु आकाशादि कार्य्येषु परमेश्वरस्य सद्रूपेणान्वयात्—अकार्य्येभ्यः खपुष्पादिभ्यस्तद्व्यतिरेकाच्च।

द्वितीय—यद्वा, अन्वयशब्देन अनुवृत्तिः, इतरशब्देन व्यावृत्तिः। अनुवृत्तत्वात् सद्रूपं ब्रह्म कारणं, मृत्सुवर्णादिवत् व्यावृत्तत्वात् विश्वकार्य्यं घटकुण्डलादिवदित्यर्थः।

तृतीय—यद्वा, सावयवत्वात् अन्वयव्यतिरेकाभ्यां यदस्य जन्मादि तत् यतो भवतीति सम्बन्धः।

द्वितीय में जो अर्थ शब्द है, वह कार्य्यकारण पर है। कारण का कारणावस्था में कार्य्यावस्था में अनुवर्त्तन होता है। कार्य्यसमूह परस्पर व्यावृत्त तो होते ही हैं, कारणावस्था में भी व्यावृत्त होते हैं। इस प्रकार कारण कार्य्य का स्वभाव को जानना होगा। उक्त कथन से आरम्भवाद एवं शून्यवाद का परिहार हुआ।

वहिर्मुख जनगण को सन्तुष्ट करने के निमित्त युक्ति का प्रदर्शन करने के पश्चात् अन्तर्मुख वृत्तिसम्पन्न जनगण को सन्तुष्ट करने के निमित्त ब्रह्मसूत्रस्थ १।१।३ 'शास्त्रयोनित्वात्' शास्त्र ही एकमात्र परमेश्वर का प्रकाशक है, नियमानुसार श्रुति प्रमाण का प्रदर्शन करते हैं। यहाँ तैत्तिरीयक उपनिषत् ३।१।१ में वर्णित है—'जिससे समस्त भूत उत्पन्न होते हैं' इत्यादि वाक्य में जिस प्रकार जन्म-स्थिति-लय का वर्णन है। उस प्रकार व्यतिरेक को भी जानना होगा। छान्दोग्य में वर्णित है—"असत् से उत्पत्ति सत् की कैसे होती है? उसमें मरीचिका दृष्टान्त के द्वारा अचेतन कारणतावाद को विदूरित करके सांख्यमतसिद्ध प्रधान का निराकरण भी करते हैं। स्वामिपादाः, तर्हि किं प्रधानं जगत्कारणत्वात् ध्येयमित्यभिप्रेतम्? नेत्याह, अभिज्ञो यस्तं, जो समस्त कार्य्यों में अभिज्ञ है, वह ही ध्येय है, प्रधान में ईक्षणकर्त्तृत्व है ही नहीं। अभि—सर्वतोभावेन च तज्ज्ञातृत्वं श्रूयते, इत्यर्थः। ईक्षण तब ही सम्भव होता है, जब वस्तु विषयक समस्त प्रकार ज्ञानादि ईक्षणकर्त्ता में विन्यस्त हो। ब्रह्मसूत्र १।१।५ 'ईक्षतेर्नाशब्दम्' उसके प्रति प्रमाण है। उक्त सूत्र का अर्थ इस प्रकार है—साङ्ख्य मतप्रसिद्ध प्रधान, विश्व रचनादि के प्रति कारण नहीं हो सकता है। प्रधान की कारणता के सम्बन्ध में श्रुतिरूप शब्द प्रमाण उपलब्ध नहीं है। श्रुति प्रमाण विहीन ही उक्त प्रधान कारणतावाद है। श्रुति प्रमाण विहीनता उक्त कारणतावाद में कैसे है। उत्तर में कहते हैं,—'ईक्षतेर्नाशब्दम्' ईक्ष धातु के द्वारा सत् शब्द वाच्य निखिल कारणोपयोगि व्यापार समन्वित वस्तु का बोध होता है। ईक्षण कर्त्तृत्व चेतन में ही सम्भव है। प्रधान, किन्तु अचेतन ही है।

यदि कहो कि—जहाँ पर आरोप होता है, वह अचेतन हो उसमें कोई आपत्ति नहीं है। किन्तु

